ॐ

# संस्कृत भारती

अक्षरम्, ८ उपमार्गः, २ घट्टः गिरिनगरम्, बेङ्गलूरु - ५६० ०८५.

# पत्रालयद्वारा संस्कृतम्

संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम् संस्कृतम्

## PARICHAYA -9

Bk. Demian 2000

## WHY PROPAGATION OF SAMSKRIT AND HOW ?

### Extending Support to Needy Student

In today's world of inflation and high prices, there are some deserving students who have the interest and aptitude, but not the means to pursue their studies in Samskrit. Some of these students have the potential to achieve much.

We see that quite often, Samskrit students are troubled by economic hardship. If every such student could find a patron, it would help both the individual and the cause.

### Taking Oath of Office in Samskrit

After being elected to a Committee, some office - bearer or members take their Oath of office in Samskrit. This is a laudable act that should be encouraged, especially among representatives of people.

We should openly felicitate such people and send them certificates appreciating the fillip that they are giving to Samskrit, so that others may also follow their example.

*NOTE:*

**The matters given in the inner pages of the cover are only for information. Questions on these points will not be asked in the exam.**



ॐ

जयतु भारतम् - जयतु भारती

# संस्कृतभारती

Samskrita Bhāratī

## पत्रालयद्वारा संस्कृतम्

Samskrit Through Correspondence

'Aksharam' 8th cross, Girinagar II Phase
Bangalore-560 085. Ph.: 6721052

## परिचयः-PARICHAYA

### नवमः पाठः - NINTH LESSON

॥ इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ॥

Bragging about his own merits even Indra loses his value.

### १. उपसर्गाः - PREPOSITIONS

A general account of the prepositions was given in the Pravesha lessons. In the present lesson we shall know about prepositions as used in sentences.

१) कार्यक्रमः प्रवर्तते[1] ।

२) रावणः पराजयते[a] ।

३) चोरः पेटिकाम् अपाहरत्[2] ।

४) कृष्णः कंसं समहरत्[b] ।

५) पुत्रः पितरम् अनुसरति ।

६) भारतीयाः संस्कृतम् अवगच्छन्ति[c] ।

७) रे [d]वाचाट ! इतः त्वं निर्गच्छ[e] ।

---

a. Is defeated, b. killed, c. understand, d. garrulous one,

८) तरुण्यः चन्द्रिकायां विहरन्ति ।

९) अम्ब ! क्षीरम् आनय ।

१०) वत्स ! त्वं निवर्तस्व[f] ।

११) बालः भगवद्गीताम् अधीते ।

१२) शत्रवः सीमाम्[g] अतिक्रामन्ति[h] ।

१३) उद्याने वृक्षाः सुशोभन्ते[3] ।

१४) वानराः वृक्षात् वृक्षम् उत्पतन्ति ।

१५) नटाः अभिनयन्ति ।

१६) बाहुबलिनं प्रतिष्ठापयन्ति ।

१७) दुःखानि सुखानि च चक्रवत् परिवर्तन्ते ।

१८) इदं वचनम् उपपद्यते[i] ।

१९) मम पिता अद्य प्रतिष्ठते[4] ।

२०) छात्रः शालातः [5]प्रतिनिवर्तते[j] ।

### विशेषः

1. The meaning of the root generally changes when a preposition is added to it.

   Ex. - वर्तते - to be, प्रवर्तते - is going on.

   गच्छति - goes, आगच्छति - comes.

2. The preposition should always precede the verb.

   Ex. - अप + अहरत् = अपाहरत्

   प्र + अवर्तत = प्रावर्तत

   सम् + अहरत् = समहरत्

   आ + अगच्छत् = आगच्छत्

3. In some cases the meaning of the verb does not change with the addition of a prepositions.

   Ex.- शोभते - सुशोभते । राजते - विराजते ॥

---

e. go away, f. return, g. border, h. cross, i. is cogent, j. returns.





4. Sometimes with the addition of a preposition the Parasmaipada changes into Atmanepada.

   Ex.- तिष्ठति - प्रतिष्ठते । जयति - पराजयते ॥

5. More than one preposition can be added to the verb.

   Ex.- वर्तते - प्रति + नि + वर्तते = प्रतिनिवर्तते

   हरति - वि + आ + हरति = व्याहरति

   गच्छति - प्रति + आ + गच्छति = प्रत्यागच्छति

   दिशति - सम् + उप + दिशति = समुपदिशति

### प्रश्नाः

१. पितरं कः अनुसरति ?

२. सीमां के अतिक्रामन्ति ?

३. कानि कथं परिवर्तन्ते ?

४. बाहुबलिनं किं कुर्वन्ति ?

५. चोरः किम् अकरोत् ?

## २. चाटुश्लोकः

There are easy ways of making money. Such ways are four. Each of them is found in one individual. It is rare to find the combination of two or three of them in one individual. They are:

दैवज्ञत्वं मान्त्रिकत्वं भैषज्यं चाटुकौशलम् ।
एकैकमर्थलाभाय द्वित्रयोगस्तु दुर्लभः ॥

Astrologer's job, magician's profession, medical practice and skill in witty sayings- each one of them is enough to make money. It is rare to find the combination of two or three of them (in one person.)

## ३. समस्या

'शतचन्द्रं नभस्तलम्' - This is a Samasya. It means that the sky is endowed with hundred moons. The Samasya can be solved through the following stanza.

दामोदर-कराघात-विह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ॥

With his mind set whirling by a terrible blow by Krishna's hand (fist), Chanura the wrestler saw the sky as if pervaded by hundred moons.

## ४. सुभाषितम्

त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥

पदविभागः-

त्यागः, गुणः, वित्तवताम्, वित्तम्, त्यागवताम्, गुणः, परस्परवियुक्तौ, तु, वित्तत्यागौ, विडम्बना ॥

तात्पर्यम्-

If the rich have a mind to give money, it is indeed a merit. If the generous persons have enough money, it is also a merit. What to do? Wealth and generosity do not go together! It is an ironical fact.

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मो न वै यत्र च नास्ति सत्यम्
सत्यं न तद्यच्छलनानुविद्धम् ॥





पदविभागः-

न, सा, सभा, यत्र, न, सन्ति, वृद्धाः, वृद्धाः, न, ते, ये, न, वदन्ति, धर्मम्, धर्मः, न, वै, यत्र, च, न, अस्ति, सत्यम्, सत्यम्, न, तत्, यत्, छलनानुविद्धम् ॥

तात्पर्यम्-

It is not an assembly where there are no elders. They are not elders if they do not teach Dharma. It is not Dharma if it does not contain truth. It is not truth at all if it is charged with deceit.

## ५. पदसङ्ग्रहः

एध् - To rise, to increase

१) एधते २) एध्यते ३) एधिष्यते
४) एधितव्यम् - एधनीयम् ५) एधितः - एधिता - एधितम् ६) एधितवान् - एधितवती ७) एधमानः - एधमाना ८) एधित्वा - प्रैध्य ९) एधितुम् ।

कूज् - To coo

१) कूजति २) कूज्यते ३) कूजिष्यति
४) कूजितव्यम् - कूजनीयम् ५) कूजितः - कूजिता - कूजितम् ६) कूजितवान् - कूजितवती ७) कूजन् - कूजन्ती ८) कूजित्वा - उत्कूज्य ९) कूजितुम् ।

कॄ - To scatter

१) किरति २) कीर्यते ३) करीष्यति - करिष्यति
४) करितव्यम्, करीतव्यम् - करणीयम् ५) कीर्णः - कीर्णा - कीर्णम् ६) कीर्णवान् - कीर्णवती ७) किरन् - किरन्ती, किरती ८) कीर्त्वा - विकीर्य ९) करितुम् - करीतुम्

क्रम् - To traverse

१) क्राम्यति, क्रामति २) क्राम्यते ३) क्रमिष्यति
४) क्रमितव्यम् - क्रमणीयम् ५) क्रान्तः - क्रान्ता - क्रान्तम्,
६) क्रान्तवान् - क्रान्तवती ७) क्रामन् - क्रामन्ती, क्राम्यन् - क्राम्यन्ती
८) क्रान्त्वा, क्रमित्वा - सङ्क्रम्य ९) क्रमितुम्

क्षम् - To tolerate

१) क्षमते २) क्षम्यते ३) क्षमिष्यते, क्षंस्यते
४) क्षन्तव्यम्, क्षमितव्यम् - क्षमणीयम् ५) क्षान्तः - क्षान्ता - क्षान्तम्
६) क्षान्तवान् - क्षान्तवती ७) क्षममाणः - क्षममाणा ८) क्षमित्वा - क्षान्त्वा, परिक्षम्य ९) क्षन्तुम् - क्षमितुम् ।

## ६. काव्यकथा

### कुशः कुमुद्वती च

नृपः कुशः कुशावतीनगरे वसति स्म । कदाचित् राजभवने कुशः रात्रौ शयने आसीत् । किन्तु प्रबुद्धः एव आसीत् । तदा अयोध्यायाः अधिदेवता तत्र आगच्छति । कुशम् उद्दिश्य वदति- 'पुरा अयोध्यायां मार्गे नूपुराणां ध्वनिः श्रूयते स्म । इदानीं शृगालानाम् अमङ्गलरवः श्रूयते । गवाक्षाः कृमितन्तुजालैः आच्छादिताः । एवम् अयोध्यानगरी मरुभूमेः अवस्थां प्राप्तवती । अतः पुनः आगत्य तत्रैव भवान् वसतु' इति । ततः कुशः शिल्पिभिः अयोध्यां नवीकृत्य तत्रैव वासम् अकरोत् ।

कुशः कदाचित् सरयूनद्यां जलक्रीडां कृत्वा तटम् आगतवान् । तस्य हस्ते 'जैत्राभरणम्' नाम वलयम् आसीत् । किन्तु तत् जले एव प्रभ्रष्टम् अभवत् । तत् आभरणं जनकेन रामेण दत्तम् आसीत् । आभरणस्य अन्वेषणार्थं कुशः बहु प्रयत्नं कृतवान् । किन्तु आभरणं न लब्धम् । 'केनापि अपहृतम्' इति मत्वा गरुडास्त्रं विमोक्तुं कुशः सन्नद्धः अभवत् । तदा नागलोकस्य राजा कुमुदः कुमुद्वत्या सह आगच्छति । कुशं प्रति- 'राजन् ! इयं कुमुद्वती मम अनुजा । सा कन्दुकेन क्रीडन्ती आसीत् । तदा भवतः 'जैत्राभरणम्' आसादितवती । अतः इदं जैत्राभरणं, कन्यारत्नं च स्वीकुरु' इति कथितवान् ।





अनन्तरं कुशः कुमुद्वतीं परिणीतवान् । कुशस्य कुमुद्वत्याः च अतिथिः नाम पुत्रः जातः । अतिथिः सकलकलासु पारङ्गतः । कदाचित् कुशः युद्धे साहाय्यं कर्तुं देवलोकं गतवान् । तत्र दुर्जयनामकेन राक्षसेन सह युद्धम् अकरोत् । यद्यपि युद्धे दुर्जयः मृतः, किन्तु तस्मिन्नेव युद्धे कुशः अपि मृतः । पत्नी कुमुद्वती चितारोहणं कृतवती । ततः सर्वे अमात्याः मिलित्वा पुत्रस्य अतिथेः पट्टाभिषेकं कृतवन्तः ।

### Kusha and Kumudvati

King Kusha was living in the city called Kushavati. Once in the night he was lying on the bed. He was awake. Then the presiding deity of Ayodhya appeared there. She said to Kusha- "On the paths of Ayodhya in the past the jingling of the anklets was being heard. Now it was the cry of the jackals that is heard. The windows are covered with cob-webs. Thus Ayodhya has been reduced to the state of a desert. Hence go back and reside in Ayodhya." Then Kusha renovated Ayodhya with skilled architects and settled in it.

Once Kusha had water-sports in Sarayu river and came to the bank. He had a bracelet called (Victory ornament) Jaitrabharana. It slipped into water. It was given by his father Rama. Kusha tried his best to find the ornament. But the ornament was not found. Thinking that somebody might have stolen it, Kusha got ready to discharge the Garuda missile. Just at the moment Kumuda the king of the Serpents' world, appeared with Kumudvati. He said to Kusha- "O king! This Kumudvati is my younger sister. She was playing with a ball. Then your 'Jaitrabharana' fell into her hands. Hence take this 'Jaitrabharana' as well as this jewel of the maiden."

Then Kusha married Kumudvati. Kusha and Kumudvati got a son by name Atithi. Atithi became well versed in all arts. Once Kusha went to heaven to render help in a battle. There he

fought against a demon called Durjaya. Durjaya however, died. But in the same war Kusha, too, died. His wife Kumudvati entered the funeral pyre with him. Then all the ministers coronated their son Atithi as the king.

### ७. अन्वयक्रमः

ईप्सितं तदवज्ञानाद्विद्धि सार्गलमात्मनः ।
प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ १६ ॥

**पदविभागः-**

ईप्सितम्, तदवज्ञानात्, विद्धि, सार्गलम्, आत्मनः, प्रतिबध्नाति, हि, श्रेयः, पूज्यपूजाव्यतिक्रमः ।

**अन्वयः-**

तदवज्ञानात्, आत्मनः, ईप्सितम्, सार्गलम्, विद्धि, हि, पूज्यपूजाव्यतिक्रमः, श्रेयः, प्रतिबध्नाति ।

**अन्वयार्थः-**

तदवज्ञानात् - By showing disrespect to the divine cow, आत्मनः - of oneself (one's), ईप्सितम् - the desired, सार्गलम् - with an impediment, विद्धि - (you) know, हि - for, पूज्यपूजाव्यतिक्रमः - violation (breach) caused by disregard of those who are worthy of respect, श्रेयः - good, प्रतिबध्नाति - prevents.

**तात्पर्यम्-**

You did not beget children because you did not wait upon the cow. Its curse has come in the way of your fulfilment. It is one's bounden duty to regard those who are deserving respect. Failing in duty engenders unhappiness.





हविषे दीर्घसत्रस्य सा चेदानीं प्रचेतसः ।
भुजङ्गपिहितद्वारं पातालमधितिष्ठति ॥ १७ ॥

**पदविभागः-**

हविषे, दीर्घसत्रस्य, सा, च, इदानीम्, प्रचेतसः, भुजङ्गपिहितद्वारम्, पातालम्, अधितिष्ठति ।

**अन्वयः-**

सा, च, इदानीम्, दीर्घसत्रस्य, प्रचेतसः, हविषे, भुजङ्गपिहितद्वारम्, पातालम्, अधितिष्ठति ।

**अन्वयार्थः-**

सा च - The divine cow, इदानीम् - now, दीर्घसत्रस्य - performing sacrifice of long duration, प्रचेतसः - to Varuna, हविषे - for oblation (like clarified butter etc), भुजङ्गपिहितद्वारम् - doors blocked by the snakes, पातालम् - the netherland (Acco), अधितिष्ठति - has occupied.

**तात्पर्यम्-**

At present the guardian deity Varuna has commenced a long-continued sacrifice. As offerings to the sacrifice, milk, curds, clarified butter and others are required. The divine cow has gone to Varuna's abode to supply all these materials. But it is difficult for you to go there now, as it is guarded by the venomous serpents. Therefore, it is impossible to serve the cow now.

(हविः - milk, clarified butter etc., offered into the fire invoking Gods).

## ८. अनुवादपद्धतिः

We know that Past Participles (भूत-कृदन्त-s) are used in place of Past Tense. Eg.

अपठत् - पठितवान्-वती-वत्
अलिखत् - लिखितवान्-वती-वत्
अगच्छत् - गतवान्-वती-वत्
अकरोत् - कृतवान्-वती-वत्

From the point of view of simplicity it is advisable to use Past Participle forms. We can make use of them without committing a single mistake. With intense practise our vocabulary would improve and our learning becomes established.

We already know that the augment letter 'अ' should precede the verb in Past Tense, Extreme care must be taken if the same verb comes after a preposition. Because the augment 'अ' comes before the verb root and after the preposition. प्र + हरति - प्रहरति is the present tense form. When changed into the past tense the letter 'अ' comes after प्र. प्र + अहरत् - प्राहरत् is the correct form. अप्रहरत् is wrong. Observe a few other examples.

| Present | Past (imperfect) | Past Part |
|---|---|---|
| विहरति - rambles | वि+अहरत्=व्यहरत् | विहृतवान् |
| संहरति - kills | सम्+अहरत्=समहरत् | संहृतवान् |
| स्वीकरोति - receives | स्वी+अकरोत्=स्व्यकरोत् | स्वीकृतवान् |
| उपविशति - sits | उप+अविशत्=उपाविशत् | उपविष्टवान् |
| उत्तिष्ठति - stands up | उत्+अतिष्ठत्=उदतिष्ठत् | उत्थितवान् |
| प्रक्षालयति - washes, cleanses | प्र+अक्षालयत्=प्राक्षालयत् | प्रक्षालितवान् |
| आगच्छति - comes | आ+अगच्छत्=आगच्छत् | आगतवान् |
| उदाहरति - quotes | उत्+आ+अहरत्=उदाहरत् | उदाहृतवान् |
| प्राप्नोति - obtains | प्र+आप्नोत्=प्राप्नोत् | प्राप्तवान् |
| अङ्गीकरोति - accepts | अङ्गी+अकरोत्=अङ्ग्यकरोत् | अङ्गीकृतवान् |





The use of Past participle forms look obviously easy from the above.

I) Write the Past Tense and Past participle forms of the following verbs. (follow the examples given above)

१. परि + हरति, २. प्रति + आ + गच्छति, ३. प्र + विशति
४. आ + नयति, ५. परि + णयति, ६. प्र + वर्तते,
७. नि + वर्तते, ८. सं + चरति, ९. सं + तुष्यति,
१०. प्र + भवति ।

## ९. सङ्ख्याह्यविषयाः

Certain groups known as consisting of ten:

दश दिशः - पूर्व, पश्चिम, उत्तर, दक्षिण, आग्नेय, नैऋत्य, वायव्य, ईशान्य, ऊर्ध्व and अधस् ।

दशोपनिषदः - ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तिरीय, बृहदारण्यक, छान्दोग्य and ऐतरेय ।

दश दानानि - गो, भू, तिल, हिरण्य, आज्य, वासस्, धान्य, गुड, रूप्य, and लवण ।

❄ ❄ ❄

ॐ

# संस्कृतभारती

पत्रालयद्वारा संस्कृतम्

## परिचयः

## नवमः पाठः

### प्रश्नाः

1. Write your sentences making use of the following words.

१. अनुवर्तते - Continues ५. विकिरति - Scatters
२. अनुकरोति - Imitates ६. आकर्षति - Drags
३. संहरति - Kills ७. अन्वभवत् - Experienced
४. अवगच्छति - Understands ८. स्वीकरोति - Accepts or receives.

2. Write अन्वयार्थ and तात्पर्य of the following verse.

दानं भोगो नाशः तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ।।
[वित्तस्य - of wealth, न भुङ्क्ते - does not enjoy, तृतीया गतिः - the third state or condition. (destruction)]



## Treasure of Knowledge in Ancient India

*(Continued from previous lesson)*

Concentrating the sun's rays with a crystal to start a fire is metioned in the Mahabharata.

यथादित्यान्मणेश्चापि वीरुद्भ्यश्चैव पावकः ।
जायन्त्येवं समुदयात् कलानामिव जन्तवः ।।

It is clear from this that people knew how to use glass in the form of a lens during the time of the Mahabharata.

There is even mention of the properties of a magnet,

अभिद्रवत्ययस्कान्तमयो निश्चितेन यथा ।
स्वभावहेतुना भावा यद्वदन्यदपीदृशम् ।।

It says that even motionless iron piece is drawn in a particular path by a magnet . Sushruta has described using a magnet to remove a nail or metal piece embedded in the body. Kautilya mentions the properties of a magnet in Arthashastra. Some people say that magnets were used in the मत्स्ययन्त्र, the device with the revolving fish in Draupadi's Swayamvara.

Static electricity was also not unknown in ancient India.

एवमुक्त्वा जहासौच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेः विद्युद्रूपा महात्मनः ।।
अङ्गुष्ठमात्राः त्रिदशाः मुमुचुः पावकार्चिषः ।

This shloka talks of particles of electricity on the form of Lord Krishna. Now, we know that by rubbing certain synthetic fibres like terylyne and nylon, static electricty is produced when we wear or remove clothes made of such materials, there is a crackling sound heard. This is seen in silk fabrics also and our forefathers had observed it. It is well known that Lord Krishna wore yellow silk robes, and attributing the sparks to His own person sounds more beautiful !

There are many such oblique references to principles of physics that we can glean from ancient Samskrit literature, which point to the level of scientific knowledge in those times.

